॥श्रीगणेशाय नमः॥पराशरः॥ आचतुर्थाद्भवेत्स्रावः पातः पंचमषष्ठयोः॥ अत ऊर्ध्वं प्रसूतिः स्यादिति॥ तत्र स्रावे॰ अष्टमासत्रयेमध्ये त्रिरात्रमाशौचम्॥
उपरि॰ आषष्ठं मासैः समसंख्यादिनमाशौचम्॥ चतुर्थे चत्वारि॰ पंचमे पंच॰
षष्ठे षाडित्यर्थः॥ सपिंडानां तु स्नानमात्रेण शुद्धिः स्रावे॥ पाते तु त्रिरात्रम्॰ स
सप्तममासप्रभृति तु संख्यातजात्युक्तं दशाहादि॰ सपिंडानां मातुश्च माधवस्तु सूति
काव्यतिरिक्तानां सप्तमे सद्यःस्नानम्॰ अष्टमे एकरात्रम्॰ नवमे प्रभृति तु दश
रात्रमित्याह॰ जन्माशौचमध्ये शिशुमरणे मृताशौचं॥ नास्त्येव॰ जननिमित्त
मितकमेवाशौचम्॥ निष्कालः निर्गमनेप्येवम्॥ नालच्छेदात्पूर्वं शिशुमरणे
सपिंडानां दिनत्रयमेव सूतकम्॥ नालच्छेदानंतरं मरणे तु संपूर्णम्॥ दशा 1

र्षादूर्ध्वं स्नाऽऽप्लवमाचमम्॥इदं च सर्वं विज्ञानेश्वराद्यनुरोधेनोक्तम्॥माधवस्म
तेनु॰ त्रिपक्षादर्वाक्त्र्यहम्॥तत आषण्मासं पक्षिणी॥तत आवर्षादहोरात्रम्
॥तदूर्ध्वं स्नानोदककर्माणि॰ इति बोध्यम्॥एतच्च त्रिरात्रादिकं समानदेश एव
देशांतरे तु स्नानमेवेति विज्ञानेश्वरादयः॥माधवस्तु देशांतरेपि सपिंडमरणे
त्र्यहम्॥सद्यःशौचं तु समानोदकमरणविषयमित्याह॥दशाहाद्यवच्छिन्ने
यः स्वाशौचकालस्तन्मध्ये द्वितीयेऽशौचे दिवसे॥जननमरणयोः श्रवणे तु अवशि
ष्टैरेव दिवसैः शुद्धिः॥प्रत्यहं योजनद्वयं गच्छन्पुरुषो यत्र मरणस्य वार्तामशौच
कालमध्ये प्रापयितुं न शक्नोति तद्देशांतरम्॥तथापि च विप्रस्य दशाहाशौचि
नो विंशति योजनैरित्यादि॥तथा॰ एकाहं॰ पक्षिणी॰ त्रिराशाशौचेषु॰ द्वि॰ चतुः २

हादुपरि णामकरणात्सर्वेशिशुमरणे न खननमेव । नाप्युदकदानम्॥ ज्ञाती
नां सचैलस्नानात्सद्यः शुद्धिः नामकरणानंतरं दंतजननात्प्राक्मरणे दाहखन
नयोर्विकल्पः॥ तत्र दहने ज्ञातीनामेकाहम्॥ अनुगमनं कृताकृतम्॥ खनने न
कौ ४ पक्षे तु सद्यः शुद्धिः॥ दंतजननादूर्ध्वं मौंजीवित्रिवर्षपर्यंतमकृतचूडस्य खनन
दहनयोर्विकल्प एव॥ खनने एकाहं सपिंडाः ततः सप्तसमानोदकाः॥ तदुत्तरं
गोत्रजा एव॥ तत्र समानोदके उत्पन्ने उपनीतम्रते त्रिरात्रम्॥ गोत्रजे तु स्ना
नाच्छुद्धिः॥ तत्र सत्याशौचं दूरगृहात्तु परिजननज्ञाने नास्त्येव तत्रापि पितुः स्ना
नमेव॥ मृताशौचं तु दशाहोपरि मासत्रयात्सर्वमरणज्ञाने त्रिरात्रम् ततआ
षष्ठं पक्षिणी॥ तत आनवममासतः॥ ततस्नानोदकदानाभ्यां शुद्धिरावर्षम् व



शि १

[illegible]

3

पितृबांधवाः॥२॥मातुःपितृष्वसुःपुत्राःमातुर्मातृष्वसुःसुताः॥मातुर्मातुलपुत्राश्चविज्ञेयाःमातृबांधवाइति॥३॥पक्षिणीसद्वार्थस्तु॰ द्विवामरणेतुदहः अंतराराात्रिःपरेद्युरक्रः॥रात्रौमरणेतुमारात्रिः अपरेद्युरहोरात्रश्चेतिहरदत्तेनोक्तः॥आगामिवर्त्तमानाहर्युक्तायांनिशिपक्षिणी॰ इत्यमरकोशव्याख्यायांक्षीरस्वामिनाप्युक्तम्॰ पक्षाविवपक्षौपूर्वोत्तरदिवसौ॰ तन्मध्यवर्त्तिनीरात्रिःपक्षिणी॰ निशामयमध्यगोदिवसोप्येवमिति॥याज्ञवल्क्यस्तु॰ दुर्वृत्तेवास्यऽनुचानमातुलः॰ श्रोत्रियेपुत्रेत्येकरात्रमाह॥तथा॰ असपिंडस्यापिपरुहेमरणेतद्गृहेस्वामिन्त्रिरात्रमित्यंगिराः॥तथा॰ बृहस्पतिः॥अहंमातामहाचार्यश्रोत्रियेषबलुचिर्भवेत्॥प्रचेताः॥मातृष्वसामातुलयोः श्वश्रूश्वसुरयोर्गुरोः॥मित्रेचर्त्विजियाज्ये च 3

ष आजनरूपदेशं नराणि योज्यानि॰ मातापित्रमरणेतु विशेषः॥ पितरौ चेन्मतौ स्याता दूरस्थो पि हि पुत्रकः॥ श्रुत्वा तद्दिनमारभ्य दशाहं सूतकी भवेत्॥ मातुः सपत्न्यां तु त्रिदिनम्॥ इदं चहीनवर्णायामित्याहु॥ मातापित्रमरणे दशाह मसुपक्रम्य॰ स्त्री पुरुषोः परस्परं चैव॰ सवर्णास्नु मसपत्नीषु चेति स्मृत्यर्थसारोक्तेः॥ इति सगोत्राशौचप्रकरणं॥ पित्रौ रूपमेवमृत कन्यायां त्रिरात्रम्॥ कृत्विजि॰ दौहित्रे॰ सहाध्यायिनि॰ बंधुत्रये॰ शिष्ये॰ श्वशुरे॰ श्वश्र्वां॰ मित्रे॰ भगिन्याम्॰ भागिनेये॰ मातामह्याम्॰ पितृष्वसरि॰ मातुले॰ मातुलान्यां च पक्षिणी॥ बंधुत्रयं तु आत्मपितृष्वसुः पुत्राः आत्ममातृष्वसुः सुताः॥ आत्ममातुलपुत्राश्च विज्ञेयाः आत्मबांधवाः॥१॥ पितुः पितृष्वसुः पुत्राः पितुर्मातृष्वसुः सुताः॥ पितुर्मातुलपुत्राश्च विज्ञेयाः

त्रिरात्रेण विशुध्यति॰ इति॰ ॥ वशिष्ठः ॥ संस्थिते पक्षिणी रात्रिर्दौहित्रे भागिनीसु
ते ॥ संस्कृते तु त्रिरात्रं स्यादिति निश्चयः ॥ आचार्यपत्नीपुत्रोपाध्याय॰ मातुल॰
श्वशुर॰ श्वशुर्य॰ सहाध्यायिशिष्येष्वतीतेष्वेकरात्रेणेत्यादि ॥ एतेषां च गुरु॰ लघु
५ ॰कल्पानां संनिधौ संनिद्धि॰ गुणागुणवदुपकर्त्रनुपकर्तृभेदेन व्यवस्थेत्या
हुः ॥ एतच्चाचार्यादिमरणे त्रिरात्रादिकमन्यस्मिन्दाहकर्त्तरि ॥ दाहकर्तुस्तु
दि ४ दशाहमेव ॥ देशाधिपतौ तु दिनमध्ये तु दिनम्॰ रात्रिमध्ये तु रात्रिः ॥ मानुषास्थिस्प
र्शे बुद्धिपूर्वं स्पृष्टे त्रिदिनम् ॥ अमानुषास्थिस्पर्शे तु सस्नेहे स्नानम्॰ आशौचि
नोऽन्नेऽनापदि बुद्धिपूर्वं सकृद्भुक्ते यस्मिन्दिने भुक्तं ततः शिष्टाहान्याशौचम् ॥ अ
सकृद्बुद्धिपूर्वं भुक्ते पितृदेवाशौचम् ॥ प्रायश्चित्ते परं विशेषः ॥ आपदि तु बुद्धि

पूर्वंभोजनेपिदिनमाशौचम्॥सजातीयस्योत्कृष्टजातीयस्यवाऽनुगमनेसचैलस्
स्नानंघृतप्राशनंच॥ब्राह्मणस्यक्षत्रियानुगमनेऽहोरात्रम्॥क्षत्रियस्यवैश्या
नुगमनेप्येवम्॥शूद्रानुगमनेपक्षिणी॥ब्राह्मणस्यशूद्रानुगमनेत्रिरात्रम्॥प
राशरः॥प्रेतीभूतंतुयःशूद्रंब्राह्मणोज्ञानदुर्बलः॥अनुगच्छेन्नीयमानंसत्रिरात्रे
णशुध्यति॥धर्मार्थमनाथत्रिरात्रेतुततस्त्रीणिनदींगत्वासमुद्रगाम्॥प्राणायाम
शतंकृत्वाघृतंप्राश्यविशुध्यति॥धर्मार्थमनाथब्राह्मणनिर्हरणेतुपदेपदेऽश्व
मेधफलम्॥अवगाहनात्सद्यःशुद्धिः॥स्नेहादिनानुगमनेकृत्यनदीयमन
मस्नानस्तऊर्ध्वहएवत्रसनोदस्नाहेनशुद्धिः॥तदूर्ध्वंवासमात्रेत्रिरात्रम्॥यस्तुन
दीयमन्त्रमस्नातिनवानऊर्ध्वमेवतिथयेकालम्॥नवनारिणस्तुमातापि

भातेतिस्त्रभिरिति॥ रात्रिमात्रशेषे पूर्वांशे चेपद्यांशे चांतरं तर्हि पूर्वांशे चं समाप्या
नंतरं द्वाभ्यां रात्रिभ्यां शुद्धिः॥ तस्याएवरात्रेः पश्चिमे चाप्येतयोरंशे चांतरे पद्यांशे
चांतरे तदा पूर्वांशे च कालानंतरं द्वाभ्यां रात्रिभ्यां शुद्धिः॥ प्रभात इति तु प्राग्वदि
त्याह॥ हरदत्तस्तु पूर्वस्मिन्नंशे चेद्रात्रिशेषे सति यद्यन्यदापतेत्तदा द्वाभ्यां शु
द्धिः सा रात्रिपरे द्युम्नेत्यर्थः॥ प्रभातेतिस्त्रभिरिति॥ अथ दशाहाद्दौव्यतीतेपरे
द्युः प्रभाते संगवे यद्यन्यदापतेत्तत्तस्त्रिभी रात्रिभिरिति॥ पित्रांशे च मध्ये
मातरि मृतायां पूर्वांशे चं सामान्यपक्षिणीमधिकां कुर्यात्॥ मात्रांशे च मध्ये
पितृमरणे तु पित्रांशे चं पूर्णमस्त्येव॥ यदि तु पित्रांशे चेद्रात्रिशेषे माता म्रिय
ते तदा पक्षिणी द्व्यहयोर्विकल्प इति केचित्॥ द्व्यहमेवेत्यपरे॥ अथांशे चानि ५

त्यतिरिक्तश्चनुनिर्हरणेऽव्रतलोपः ॥ मातापितृनिर्हरणेप्याशौचिनाम्नं ब्रह्म
चारी नाश्नीयात्तैः सह न संविशेच्च ॥ सूतके वर्तमाने तु द्वितीयं सूतकं यदि ॥ पू
र्वेणैव तु शुद्धेत् जातेजाते मृते मृतम् ॥ मृतजातकयोगे तु या शुद्धिः सा निगद्यते
मृतेन शुध्यते जातं न मृतं जातकेन तु ॥ अन्यत्रापि ॥ शावेन शुध्यते सूतिर्न सूतिः
शावशोधिनी ॥ यद्यनुपूर्वाशौचापेक्षयाऽधिककालव्यापि द्वितीयमापतति । य
थात्रिरात्रे प्रक्रांते दशाहमृत ॥ तत्र पूर्वशेषेण शुद्धिर्नास्ति । यदि तु पूर्वं प्रवृत्तमा
शौचमुत्तराशौचकालाद्दीर्घाधिककालं तदा पूर्वशेषेणैवोत्तरस्य शुद्धिः ॥ तद्यथा ॥ ग
र्भपातनिमित्तषडहाशौचमध्ये यदि दशाहाशौचमापतेत् ॥ तदा षडहाशौच
शेषेणैव दशाहाशौचे शुद्धिः ॥ अत्र विशेषमाह गौतमः ॥ रात्रिशेषे द्वाभ्याम् ॥ प्र

वसप्रभृति॰ संचयनंतु प्रथमेन्हि तृतीयेह्नि स्वाद्दिने। विहितमुभयोरपिसप्ता
रादिवसप्रभृत्येव॥ आहिताग्नेः पितरि देशांतरमृते न पुत्रादीनां संस्कारारोप
क्रमादाशौचं नास्ति॥ अनाहिताग्ने तु विधिवदाहाभावे तदानीमाशौचग्रहणं वै
कल्पिकम्॰ न च गृहीताशौचानां संस्कारकालेपु नः ग्रहणम्॥ अगृहीताशौचानां
6 तु पूर्णं दशाहादेव॥ पुत्रादीनां पक्षद्वये व्यवस्था॥ पत्नीसंस्कारे पत्युश्चैवम्॥ स
पत्न्या भर्तुश्चैवम्॥ अगृहीताशौचानां सपिंडानां दशाहमेव॥ इदं चाशौचं द्वि
विधम्॥ अस्पृश्यत्वप्रयोजकम्॰ कर्मानधिकारलक्षणं च॥ पुत्रेजाते पितुरा
स्नानेमस्पृश्यता॥ मातुर्दशाहमेव॥ सपिंडानांत्वस्पृश्यतानास्त्येव॥ किंतुकर्मा
नर्हतामात्रम्॰ सूतिका पुत्रजनने सप्तविंशतिरात्रं कर्मानर्हा कन्याजनने तुग॥ ६

धाः॥ न संशयं प्रपद्येतेति शास्त्रमुल्लंघ्य महानदीतरणाशौ प्रवृत्तः सन्यो म्रिय
ते तस्य दाहाशौचादि न कार्यम्॥ संवत्सरानंतरं नारायणबलिं कृत्वा सर्वमौर्ध्व
दैहिकं कार्यमेव॥ सर्पहतेऽसौ वर्णेनागं प्रसक्षौ गां च दद्यादित्यधिकम्॥ प्रमा
दमरणे त्वाशौचादिकमस्त्येव॥ तथा चांगिराः॥ यदि कश्चित्प्रमादेन म्रियेता॰
ग्न्युदकादिभिः॥ तस्याशौचं विधातव्यं कर्तव्या चोदकक्रियेति॥ वैधमरणे तु
विशेषमाह शातातपः॥ वृद्धः शौचक्रियाकुष्टः प्रत्याख्यातभिषक्क्रियः॥ आत्मा
नं घातयेद्यस्तु भृग्वग्न्यनशनांबुभिः॥ तस्य त्रिरात्रमाशौचं द्वितीये त्वस्थिसंचयः॥
(द्वितीये त्वस्थिसंचयः॥) तृतीये तूदकं कृत्वा चतुर्थे श्राद्धमाचरेदिति इदं चाशौच
माहिताग्नेरुपरमे संस्कारदिवसप्रभृति कर्तव्यम्॰ अनाहिताग्नेस्तु मरणादि

सम्॰ पुत्रजन्मदिवसे पितुर्दानाद्योवचनादधिकारः॥ तथा च संखलिखितौ॰
कुमारप्रसवे नाभ्याम छिन्नायां दानप्रतिग्रहादि षु दोषः स्तद हरित्येके इति॥
जन्मदारभ्यदेवतापूजायामपि प्रथम॰ षष्ठ॰ दशमदिवसेषु वचनादधिकारः
॥ ॥इत्याशौचनिर्णयः॥ ॥शुभं भवतु कल्याणम्॥ ॥ ॥

७